ॐ

श्री परमात्मने नमः

॥ श्रीगणेशाय नमः ॥

श्रीमदन्नम्भट्टविरचितः

# तर्कसङ्ग्रहः



(दूरजङ्गमयन्त्रसम्पादनम्)

(मूलमात्रम्)



BS 2073-08-15

सम्पादकः

चिरञ्जीवी खतिवडा

*Email:- ckachal@gmail.com*

देवघाट-२, तनहूँ

# विषयसूची



प्रीन्ट् कर्तुमत्र क्लिक् क्रियताम्

॥श्री॥

# तर्कसंग्रहः

निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।
बालानां सुखबोधाय क्रियते तर्कसंग्रहः ॥

## *पदार्थाः*

द्रव्यगुणकर्मसामान्यविशेषसमवायअभावाः सप्त पदार्थाः ।

## *नव द्रव्याणि*

पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव ।

## *चतुर्विंशतिः गुणाः*

रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभाग – परत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छा – द्वेषप्रयत्नधर्माऽधर्मसंस्काराश्चतुर्विंशतिगुणाः ।

## *पञ्च कर्माणि*

उत्क्षेपणापक्षेपणाऽऽकुञ्चनप्रसारणगमनानि पञ्चकर्माणि ।

## *सामान्यम्*

परमपरञ्चेति द्विविधं सामान्यम् ।

## *विशेषः*

नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव ।

## *समवायः*

समवायस्त्वेक एव ।

## *अभावः*

अभावश्चतुर्विधः– प्रागभावः, प्रध्वंसाभावः, अत्यन्ताभावः, अन्योन्याभावश्चेति ।

# १. द्रव्यलक्षणप्रकरणम्

## *पृथिवी*

तत्र गन्धवती पृथिवी । सा द्विविधा–नित्या अनित्या च । नित्या परमाणुरूपा । अनित्या कार्यरूपा । पुनस्त्रिविधा– शरीरेन्द्रियविषयभेदात् । शरीरमस्मदादीनाम् । इन्द्रियं गन्धग्राहकं घ्राणं नासाऽग्रवर्ति । विषयो मृत्पाषाणादिः ।

## *आपः*

शीतस्पर्शवत्य आपः । ता द्विविधाः । नित्या अनित्याश्च । नित्याः परमाणुरूपाः । अनित्याः कार्यरूपाः । पुनस्त्रिविधाः– शरीरेन्द्रियविषयभेदात् । शरीरं वरुणलोके । इन्द्रियं रसग्राहकं रसनं जिह्वाऽग्रवर्ति । विषयः सरित्समुद्रादिः ।

## *तेजः*

उष्णस्पर्शवत्तेजः । तच्च द्विविधं नित्यमनित्यञ्च । नित्यं परमाणुरूपम्, अनित्यं कार्यरूपम् । पुनस्त्रिविधं – शरीरेन्द्रियविषयभेदात् । शरीरमादित्यलोके प्रसिद्धम् । इन्द्रियं रूपग्राहकं चक्षुः कृष्णताराग्रवर्ति । विषयश्चतुर्विधः –भौम–दिव्यौ–दर्या–करजभेदात् । भौमं वह्न्यादिकम् । अबिन्धनं दिव्यं विद्युदादि । भुक्तस्य परिणामहेतुरौदर्यम् । आकरजं सुवर्णादि ।

## *वायुः*

रूपरहितः स्पर्शवान्वायुः । स द्विविधो नित्योऽनित्यश्च । नित्यः परमाणुरूपः । अनित्यः कार्यरूपः । सः पुनस्त्रिविधः शरीरेन्द्रियविषयभेदात् । शरीरं वायुलोके । इन्द्रियं स्पर्शग्राहकं त्वक्, सर्वशरीरवर्ति । विषयो वृक्षादिकम्पनहेतुः । शरीराऽन्तःसञ्चारी वायुः प्राणः, स चैकोऽपि उपाधिभेदात् प्राणाऽपानादिसंज्ञां लभते ।

## *आकाशः*

शब्दगुणकमाकाशम् । तच्चैकं विभु नित्यं च ।

## *कालः*

अतीतादिव्यवहारहेतुः कालः । स चैको विभुर्नित्यश्च ।

## *दिक्*

प्राच्यादिव्यवहारहेतुर्दिक्। सा चैका नित्या विभ्वी च।

## *आत्मा*

ज्ञानाऽधिकरणमात्मा। स द्विविधः परमात्मा जीवात्मा चेति। तत्रेश्वरः सर्वज्ञः, परमात्मा एक एव। जीवस्तु प्रतिशरीरं भिन्नो विभुर्नित्यश्च।

## *मनः*

सुखाद्युपलब्धिसाधनमिन्द्रियं मनः। तच्च प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यञ्च।

# २.गुणलक्षणप्रकरणम्

## *रूपम्*

चक्षुर्मात्रग्राह्यो गुणो रूपम्। तच्च शुक्लनीलपीतरक्तहरित-कपिशचित्रभेदात् सप्तविधम्। पृथिवीजलतेजोवृत्तिः। तत्र पृथिव्यां सप्तविधम्, अभास्वरशुक्लं जले। भास्वरशुक्लं तेजसि।

## *रसः*

रसनाग्राह्यो गुणो रसः। स च मधुराऽ–म्ल–लवण–कटु–कषाय–तिक्तभेदात् षड्विधः। पृथिवीजलवृत्तिः। तत्र पृथिव्यां षड्विधः। जले मधुर एव।

## *गन्धः*

घ्राणग्राह्यो गुणो गन्धः । स च द्विविधः– सुरभिरसुरभिश्च । पृथिवीमात्रवृत्तिः ।

## *स्पर्शः*

त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः । स च त्रिविधः– शीतोष्णाऽनुष्णाशीतभेदात् । पृथिव्यप्तेजोवायुवृत्तिः । तत्र शीतो जले । उष्णस्तेजसि । अनुष्णाऽशीतः पृथिवीवाय्योः ।

## *पाकजादि*

रूपादिचतुष्टयं पृथिव्यां पाकजमनित्यञ्च । अन्यत्राऽपाकजं नित्यमनित्यञ्च । नित्यगतनित्यम् । अनित्यगतमनित्यम् ।

## *संख्या*

एकत्वादिव्यवहारहेतुः संख्या । सा नवद्रव्यवृत्तिः । एकत्वादिपरार्धपर्यन्ता । एकत्वं नित्यमनित्यञ्च । नित्यगतं नित्यम् । अनित्यगतमनित्यम् । द्वित्वादिकं तु सर्वत्राऽनित्यमेव ।

## *परिमाणम्*

मानव्यवहारासाधारणं कारणं परिमाणम्, नवद्रव्यवृत्तिः । तच्चतुर्विधम्– अणु, महत्, दीर्घं, ह्रस्वञ्चेति ।

## *पृथक्त्वम्*

पृथग्व्यवहाराऽसाधारणकारणं पृथक्त्वम् । सर्वद्रव्यवृत्तिः ।

## *संयोगः*

संयुक्तव्यवहारहेतुः संयोगः । सर्वद्रव्यवृत्तिः ।

## *विभागः*

संयोगनाशको गुणो विभागः । सर्वद्रव्यवृत्तिः ।

## *परत्वम्/अपरत्वम्*

पराऽपरव्यवहारा–साधारणकारणे परत्वाऽपरत्वे । पृथिव्यादिचतुष्टयमनोवृत्तिनी । ते द्विविधे–दिक्कृते कालकृते च । दूरस्थे दिक्कृतं परत्वम् । समीपस्थे दिक्कृतमपरत्वम् । ज्येष्ठे कालकृतं परत्वम् । कनिष्ठे कालकृतमपरत्वम् ।

## *गुरुत्वम्*

आद्यपतनाऽसमवायिकारणं गुरुत्वम् । पृथिवीजलवृत्तिः ।

## *द्रवत्वम्*

आद्यस्यन्दनासमवायिकारणं द्रवत्वम् । पृथिव्यप्तेजोवृत्तिः । तद् द्विविधं–सासिद्धिकं नैमित्तिकञ्च । सांसिद्धिकं जले, नैमित्तिकं पृथिवीतेजसोः । पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वं, तेजसि सुवर्णादौ ।

## *स्नेहः*

चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः। जलमात्रवृत्तिः।

## *शब्दः*

श्रोत्रग्राह्यो गुणः शब्दः । आकाशमात्रवृत्तिः । स द्विविधो– ध्वन्यात्मको वर्णात्मकश्च। तत्र ध्वन्यात्मको भेर्यादौ। वर्णात्मकः संस्कृतभाषादिरूपः।

## *बुद्धिः*

सर्वव्यवहारहेतुर्गुणो बुद्धिर्ज्ञानम् । सा द्विविधा– स्मृतिरनुभवश्च।

## *स्मृतिः*

संस्कारमात्रजन्यं ज्ञानं स्मृतिः।

## *अनुभवः*

तद्भिन्नं ज्ञानमनुभवः। स द्विविधः–यथार्थोऽयथार्थश्च।

## *यथार्थानुभवः*

तद्वति तत्प्रकारकोऽनुभवो यथार्थः । यथा–रजते 'इदं रजतम्' इति ज्ञानम्। सैव प्रमेत्युच्यते।

## *अयथार्थानुभवः*

तदभाववति तत्प्रकारकोऽनुवभोऽयथार्थः। यथा–शुक्तौ 'इदं रजतम्' इति ज्ञानम्। सैवाऽप्रमेत्युच्यते।

## *यथार्थानुभवभेदाः*

यथार्थाऽनुभवश्चतुर्विधः–प्रत्यक्षाऽ–नुमित्यु–पमिति–शाब्दभेदात् ।

## *यथार्थानुभवकरणानि*

तत्करणमपि चतुर्विधं – प्रत्यक्षाऽ–नुमानो–पमान–शब्दभेदात् ।

## *करणम्/कारणम्*

असाधारणं कारणं करणम् । कार्यनियतपूर्ववृत्तिः कारणम् ।

## *कार्यम्*

कार्यं प्रागभावप्रतियोगी ।

## *कारणभेदाः*

कारणं त्रिविधं–समवाय्यसमवायिनिमित्तभेदात् ।

## *समवायिकारणम्*

यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम् । यथा– तन्तवः पटस्य, पटश्च स्वगतरूपादेः ।

## *असमवायिकारणम्*

कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतं सत् कारणमसमवायिकारणम् । यथा– तन्तुसंयोगः पटस्य, तन्तुरूपं पटरूपस्य ।

### *निमित्तकारणम्*

तदुभयभिन्नं कारणं निमित्तकारणम् । यथा– तुरीवेमादिकं पटस्य ।

### *करणम्*

तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव करणम् ।

## प्रत्यक्षप्रकरणम्

### *प्रत्यक्षलक्षणम्/भेदश्च*

तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम् । इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम् । (ज्ञानाऽकरणकं ज्ञानं प्रत्यक्षम्) तद् द्विविधं– निर्विकल्पकं सविकल्पकञ्चेति ।

### *निर्विकल्पकम्*

तत्र निष्प्रकारकं ज्ञानं निर्विकल्पकम् । यथेदं किञ्चित् ।

### *सविकल्पकम्*

सप्रकारकं ज्ञानं सविकल्पकम् । यथा–डित्थोऽयम्, ब्राह्मणोऽयम्, श्यामोऽयमिति ।

### *सन्निकर्षः*

प्रत्यक्षज्ञानहेतुरिन्द्रियाऽसन्निकर्षः षड्विधः– संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति ।

## *संयोगसन्निकर्षः*

चक्षुषा घटप्रत्यक्षजनने संयोगः सन्निकर्षः ।

## *संयुक्तसमवायसन्निकर्षः*

घटरूपप्रत्यक्षजनने संयुक्तसमवायः सन्निकर्षः, चक्षुःसंयुक्ते घटे रूपस्य समवायात् ।

## *संयुक्तसमवेतसमवायसन्निकर्षः*

रूपत्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः सन्निकर्षः । चक्षुः संयुक्ते घटे रूपं समवेतं,तत्र रूपत्वस्य समवायात् ।

## *समवायसन्निकर्षः*

श्रोत्रेण शब्दसाक्षात्कारे समवायः सन्निकर्षः । कर्णविवरवर्त्याकाशस्य श्रोत्रत्वात् । शब्दस्याकाशगुणत्वात्, गुणगुणिनोश्च समवायात् ।

## *समवेतसमवायसन्निकर्षः*

शब्दत्वसाक्षात्कारे समवेतसमवायः सन्निकर्षः । श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात् ।

### *विशेषणविशेष्यभावसन्निकर्षः*

अभावप्रत्यक्षे विशेषणविशेष्यभावः सन्निकर्षः । ‘घटाऽभाववद् भूतलम्’ इत्यत्र चक्षुः संयुक्ते भूतले घटाऽभावस्य विशेषणत्वात् ।

### *इन्द्रियाणां प्रत्यक्षप्रमाणत्वम्*

एवं सन्निकर्षषट्कजन्यं ज्ञानं प्रत्यक्षं, तत्करणमिन्द्रियं तस्मादिन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धम् ।

## अथ अनुमानप्रकरणम्

### *अनुमानलक्षणम्*

अनुमितिकरणमनुमानम् ।

### *अनुमितिलक्षणम्*

परामर्शजन्यं ज्ञानमनुमितिः ।

### *परामर्शः*

व्याप्तिविशिष्टपक्षधर्मता–ज्ञानं परामर्शः । यथा – ‘वह्निव्याप्यधूमवानयं पर्वतः’ इति ज्ञानं परामर्शः । तज्जन्यं पर्वतो वह्निमान्, इति ज्ञानमनुमितिः ।

### *व्याप्तिः*

‘यत्र यत्र धूमस्तत्र तत्र वह्निः’ इति साहचर्यनियमो व्याप्तिः ।

## *पक्षधर्मता*

व्याप्यस्य पर्वतादिवृत्तित्वं पक्षधर्मता ।

## *अनुमानभेदः*

अनुमानं द्विविधं–स्वार्थं परार्थं च ।

## *स्वार्थानुमितिः*

तत्र स्वार्थं स्वानुमितिहेतुः । तथाहि स्वयमेव भूयोदर्शनेन ‘यत्र यत्र धूमस्तत्र तत्राग्निः’ इति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतस्तद्गते चाग्नौ सन्दिहानः पर्वते धूमं पश्यन् व्याप्तिं स्मरति–‘यत्र यत्र धूमस्तत्र तत्राग्निः’ इति । तदनन्तरं ‘वह्निव्याप्य धूमवानयं पर्वतः’ इति ज्ञानमुत्पद्यते, अयमेव लिङ्गपरामर्श इत्युच्यते । तस्मात्पर्वतो वह्निमान्, इति ज्ञानमनुमितिरुत्पद्यते । तदेतत्स्वार्थानुमानम् ।

## *परार्थानुमितिः*

यत्तु स्वयं धूमादग्निमनुमाय परं प्रति बोधयितुं पञ्चावयववाक्यं प्रयुज्यते, तत्परार्थानुमानम् । यथा – पर्वतो वह्निमान्, धूमवत्वात्, यो यो धूमवान् स स वह्निमान् यथा महानसम्, तथा चायम्, तस्मात्तथा इति । अनेन प्रतिपादिताल्लिङ्गात्परोऽप्यग्निं प्रतिपद्यते ।

## *पञ्चावयवा:*

प्रतिज्ञा–हेतू–दाहरणो–पनय–निगमनानि पञ्चावयवाः। (१) पर्वतो वह्निमान्, इति प्रतिज्ञा। (२) धूमवत्त्वादिति हेतुः। (३) यो यो धूमवान् स स वह्निमानित्युदाहरणम्। (४) तथा चायमित्युपनयः। (५) तस्मात्तथेति निगमनम्।

## *लिङ्गपरामर्शस्य अनुमानत्वम्*

स्वार्थानुमिति–परार्थानुमित्योर्लिङ्गपरामर्श एव करणम्। तस्मात् लिङ्गपरामर्शोऽनुमानम्।

## *लिङ्गभेद:*

लिङ्गं त्रिविधम्–अन्वयवेतिरेकि, केवलान्वयि, केवलव्यतिरेकि चेति।

## *अन्वयवेतिरेकि*

अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयवेतिरेकि। यथा – वह्नौ साध्ये धूमवत्वम्। 'यत्र धूमस्तत्राग्निर्यथा महानसम्' इत्वन्वयव्याप्तिः। यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा ह्रदः इति व्यतिरेकव्याप्तिः।

## *केवलान्वयि*

अन्वयमात्रव्याप्तिकं केवलान्वयि। यथा–घटोऽभिधेयः प्रमेयत्वात् पटवत्। अत्र प्रमेयत्वा-

भिधेयत्वयोर्व्यतिरेकव्याप्तिर्नास्ति, सर्वस्यापि प्रमेयत्वादभिधेयत्वाच्च।

## *केवलव्यतिरेकि*

व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि । यथा – ‘पृथिवीतरेभ्यो भिद्यते गन्धवत्वात्, यदितरेभ्यो न भिद्यते न तद् गन्धवत्, यथा जलम् । न चेयं तथा । तस्मान्न तथेति ।’ अत्र यद्गन्धवत् तदितरभिन्न-मित्यन्वयदृष्टान्तो नास्ति। पृथिवीमात्रस्य पक्षत्वात्।

## *पक्षः*

सन्दिग्धसाध्यवान् पक्षः। यथा –धूमवत्वे हेतौ पर्वतः।

## *सपक्षः*

निश्चितसाध्यवान् सपक्षः। यथा –तत्रैव महानसम्।

## *विपक्षः*

निश्चितसाध्याभाववान् विपक्षः। यथा–तत्रैव महाह्रदः।

## *हेत्वाभासाः*

सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च हेत्वाभासाः।

## *सव्यभिचारभेदः*

सव्यभिचारोऽनैकान्तिकः । स त्रिविधः – साधारणा-साधारणा-नुपसंहारिभेदात् ।

## *साधारणः*

तत्र साध्याभाववद्वृत्तिः साधारणोऽनैकान्तिकः । यथा– पर्वतो बह्निमान् प्रमेयत्वादिति । अत्र प्रमेयत्वस्य बह्न्यभाववति ह्रदे विद्यमानत्वात् ।

## *असाधारणः*

सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिरसाधारणः । यथा– शब्दो नित्यः शब्दत्वादिति । शब्दत्वं हि सर्वेभ्यो नित्येभ्योऽनित्येभ्यश्च व्यावृत्तं शब्दमात्रवृत्तिः ।

## *अनुपसंहारी*

अन्वयव्यतिरिक्तदष्टान्त–रहितोऽनुपसंहारी । यथा सर्वमनित्यं प्रमेयत्वादिति । अत्र सर्वस्यापि प्रमेयत्वाद् दष्टान्तो नास्ति ।

## *विरुद्धः*

साध्याभावव्याप्तो हेतुर्विरुद्धः । यथा– शब्दो नित्यः कृतकत्वादिति । अत्र कृतकत्वं हि नित्यत्वाभावेनाऽनित्यत्वेन व्याप्तम् ।

## *सत्प्रतिपक्षः*

यस्य साध्याभावसाधकं हेत्वन्तरं विद्यते स सत्प्रतिपक्षः । यथा शब्दो नित्यः श्रावणत्वाच्छब्दवत् । शब्दोऽनित्यः कार्यत्वाद् घटवत् ।

## *असिद्धः*

असिद्धस्त्रिविधः– आश्रयासिद्धः, स्वरूपासिद्धः, व्याप्यत्वासिद्धश्चेति ।

## *आश्रयासिद्धः*

आश्रयासिद्धो यथा– गगनारविन्दं सुरभि अरविन्दत्वात् सरोजारविन्दवत् । अत्र गगनारविन्दमाश्रयः स च नास्त्येव ।

## *स्वरूपासिद्धः*

स्वरूपासिद्धो यथा– शब्दो गुणश्चाक्षुषत्वात् । अत्र चाक्षुषत्वं शब्दे नास्ति, शब्दस्य श्रावणत्वात् ।

## *व्याप्यत्वासिद्धः*

सोपाधिको हेतुर्व्याप्यत्वाऽसिद्धः । साध्यव्यापकत्वे सति साधनाव्याप्यकत्वमुपाधिः । साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वम् । साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वम् ।

यथा – पर्वतो धूमवान् वह्निमत्वादित्यत्रा-ऽर्द्रेन्धनसंयोग उपाधिः । तथा– यत्र धूमस्तत्रार्द्रेन्धनसंयोगः इति साध्यव्यापकत्वम् । यत्र वह्निस्तत्रार्द्रेन्धनसंयोगो नास्ति, अयोगोलके आर्द्रेन्धनसंयोगाभावादिति साधनाव्यापकत्वम् । एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वा-दार्द्रेन्धनसंयोग उपाधिः । सोपाधिकत्वाद्वह्निमत्वं व्याप्यत्वासिद्धम् ।

### *बाधितः*

यस्य साध्याभावः प्रमाणान्तरेण पक्षे निश्चितः, स बाधितः । यथा वह्निरनुष्णो द्रव्यत्वादिति । अत्रानुष्णत्वं साध्यं, तदभाव उष्णत्वं स्पार्शनप्रत्यक्षेण गृह्यते इति बाधितम् ।

## अथोपमानप्रकरणम्

### *उपमानम्*

उपमितिकरणमुपमानम् । संज्ञा–संज्ञिसम्बन्धत्वज्ञान-मुपमितिः । तत्करणं सादृश्यम् । तथा हि– कश्चिद्गवयपदाऽर्थमजानन् कुतश्चिदारण्यकपुरुषात् ‘गोसदृशो गवय’ इति श्रुत्वा वनं गतो ‘गोसदृशो गवय’ इति वाक्यार्थं स्मरन् गोसदृशं पिण्डं पश्यति ।

 

तदनन्तरमसौ ‘अयं गवयशब्दपदवाच्य’ इत्युपमितिरुत्पद्यते।

# अथ शब्दखण्डः

## *शब्दप्रमाणम्*

आप्तवाक्यं शब्दः। आप्तस्तु यथाऽर्थवक्ता। वाक्यं पदसमूहः। यथा–गामानयेति। शक्तं पदम्। अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरसंकेतः शक्तिः।

## *वाक्यार्थज्ञाने हेतवः*

आकांक्षा योग्यता सन्निधिश्च वाक्याऽर्थज्ञाने हेतुः। पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकांक्षा। अर्थाऽबाधो योग्यता। पदानामविलम्बेनोच्चारण सन्निधिः। तथा चाकांक्षारहितं वाक्यमप्रमाणम्। यथा–गौरश्वः पुरुषो हस्तीति न प्रमाणम्। आकांक्षाविरहात्। वह्निना सिञ्चतीति न प्रमाणं, योग्यताविरहात्। प्रहरे प्रहरेऽसहोच्चारितानि गामानयेत्यादिपदानि न प्रमाणं, सान्निध्याऽभावात्।

### *वाक्यभेदः*

वाक्यं द्विविधं– वैदिकं लौकिकञ्च । वैदिकमीश्वरोक्तत्वात्सर्वमेव प्रमाणम् । लौकिकं त्वाप्तोक्तं प्रमाणम् । अन्यदप्रमाणम् ।

### *शब्दस्य करणत्वम्*

वाक्याऽर्थज्ञानं शब्दज्ञानम् । तत्करणं तु शब्दः ।

## अथाऽवशिष्टगुणनिरूपणम्

### *अयथार्थानुभवभेदः*

अयथाऽर्थानुभवस्त्रिविधः– संशयविपर्ययतर्कभेदात् ।

### *संशयः*

एकस्मिन्धर्मिणि विरुद्धनानाधर्मवैशिष्ट्याऽवगाहि ज्ञानं संशयः । यथा–स्थाणुर्वा पुरुषो वेति ।

### *विपर्ययः*

मिथ्याज्ञानं विपर्ययः । यथा– शुक्तौ 'रजतम्' इति ।

### *तर्कः*

व्याप्यारोपेण व्यापकारोपस्तर्कः । यथा–'यदि वह्निर्न स्यात्तर्हि धूमोऽपि न स्यात्' इति । स्मृतिरपि द्विविधा– यथार्था अयथार्था चेति । प्रमाजन्या यथार्था, अप्रमाजन्या अयथार्था ।

## *सुखम्*

सर्वेषामनुकूलवेदनीयं सुखम् ।

## *दु:खम्*

(सर्वेषाम्) प्रतिकूलवेदनीयं दु:खम् ।

## *इच्छा/द्वेष:/प्रयत्न:*

इच्छा काम: । क्रोधो द्वेष: । कृति: प्रयत्न: ।

## *धर्म:/अधर्म:*

विहितकर्मजन्यो धर्म: । निषिद्धकर्मजन्यस्त्वधर्म: ।

## *आत्ममात्रविशेषगुणा:*

बुद्ध्यादयोऽष्टावात्ममात्रविशेषगुणा: । बुद्धीच्छा-प्रयत्ना नित्या अनित्याश्च । नित्या ईश्वरस्य, अनित्या जीवस्य ।

## *संस्कार:*

संस्कारस्त्रिविधो– वेगो, भावना स्थितिस्थापकश्चेति । वेग: पृथिव्यादि चतुष्टयमनोवृत्ति: । अनुभवजन्या स्मृतिहेतुर्भावना । आत्ममात्रवृत्ति: । अन्यथाकृतस्य पुनस्तदवस्थाऽऽपादक: स्थितिस्थापक: । कटादिपृथिवीवृत्ति: ।

 

# ३.कर्मलक्षणम्

चलनात्मकं कर्म । ऊर्द्ध्वदेशसंयोगहेतुरुत्क्षेपणम् । अधोदेशसंयोगहेतुरपक्षेपणम् । शरीरस्य सन्निकृष्ट-संयोगहेतुराकुञ्चनम् । विप्रकृष्टसंयोगहेतुः प्रसारणम् । अन्यत्सर्वं गमनम् ।

# ४.सामान्यलक्षणम्

नित्यमेकमनेकानुगतं सामान्यम् । द्रव्यगुणकर्मवृत्ति । तद् द्विविधं– परापरभेदात् । परं सत्ता, अपरं द्रव्यत्वादि ।

# ५.विशेषलक्षणम्

नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः ।

# ६.समवायलक्षणम्

नित्यसंबन्धः समवायः । अयुतसिद्धवृत्तिः । ययोर्द्वयोर्मध्ये एकमविनश्यदपराश्रितमेवावतिष्ठते । तावयुतसिद्धौ यथा अवयवावयविनौ गुणगुणिनौ, क्रियाक्रियावन्तौ, जातिव्यक्ती, विशेषनित्यद्रव्ये चेति ।

 

# ७.अभावलक्षणम्

## *प्रागभावः*

अनादिः सान्तः प्रागभावः। उत्पत्तेः पूर्वं कार्यस्य।

## *प्रध्वंशाभावः*

सादिरनन्तः प्रध्वंशः। उत्पत्त्यनन्तरं कार्यस्य।

## *अत्यन्ताभावः*

त्रैकालिकसंसार्गावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावः। यथा– भूतले घटो नास्ति।

## *अन्योऽन्याभावः*

तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकोऽन्योन्याभावः। यथा –घटः पटो नेति।

## *पदार्थनिष्कर्षः*

सर्वेषां पदार्थानां यथायथमुक्तेष्वन्तर्भावात्सप्तैव पदार्था इति सिद्धम्।

**कणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये।**
**अन्नम्भट्टेन विदुषा रचितस्तर्कसंग्रहः॥**

